एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्यनुसंदधाति **यस्य स्यादद्धा न विचिकित्साऽस्ति** । अत्र इतिशब्दोऽध्याहर्तव्यः । **अभिसंभवितास्मीति इतीतिशब्दस्य** काकाक्षिन्यायेन वाऽन्वयः । इति उक्तप्रकारेण **यस्य** उपासकस्य **अद्धा** निश्चयोऽस्ति, तस्य प्राप्तौ **विचिकित्सा** संशयो नास्तीत्यर्थः ।

उक्तार्थस्य[1] श्रद्धेयत्वसिद्ध्यै वक्तृगतिं दर्शयति **इति ह स्माह शाण्डिल्य-श्शाण्डिल्यः** । द्विरुक्तिर्विद्यासमाप्त्यर्था । अयमर्थः सर्वोऽपि भाष्यश्रुतप्रकाशिकयोः स्पष्टः ॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते — इयं विद्या समन्वयाध्याये द्वितीयपादे चिन्तिता । तत्र हि — सर्वं खल्विदं ब्रह्मेत्यत्र ब्रह्मशब्देन प्रत्यगात्मैव निर्दिश्यते । तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिस्तम्बपर्यन्तभावश्च प्रत्यगात्मन एवानाद्यविद्यामूलकर्मविशेषोपाधिक उपपद्यते । परमात्मनः निरस्तसमस्त[illegible] (नि) स्य समस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि ब्रह्मशब्दः क्वचित् क्वचित् प्रयुज्यते, 'इदं ब्रह्माऽऽयाती' त्यादौ । अत एव परमात्मा, परं ब्रह्मेति परमेश्वरस्य क्वचित् सविशेषणो निर्देशः । प्रत्यगात्मनश्च निर्मुक्तोपाधेः ब्रह्मत्वञ्च विद्यते, 'स चानन्त्याय कल्पत' इति श्रुतेः । अविदुषस्तस्यैव कर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानाम्, 'तज्जलान्' इति हेतुनिर्देशोऽप्युपपद्यते । अतो जीव एवात्र संदर्भे प्रतिपाद्यत इति पूर्वपक्षे प्राप्ते — उच्यते ।

**'सर्वत्र प्रसिद्धोपदेशात्'** । **सर्वत्र** सर्वस्मिन्, जगति । 'सर्वं खल्विदं ब्रह्मे' ति तदात्मतया विधीयमानं परं ब्रह्मैव । कुतः ? **प्रसिद्धोपदेशात्** । तज्जल-

1. उक्तस्य ख.

**तस्यैवेति** । न तु परब्रह्मणः । सर्वशब्देन इदन्त्व[illegible] अत्र
हेयाकरसर्वभावेति हेयाकर-
त्वमात्रस्य वाच्यत्वात् तत्र ब्रह्माभेदबाधादिति पूर्वपक्षियुक्तिः । [illegible] 'इदं
वर्तित्वस्वीकारस्यापि संभोगप्राप्त्याऽनुपपन्नत्वे स्थिते हेयभाव न कथंचिदपि [illegible]म । ब्रह्मत्वञ्च विद्यत
ब्रह्माऽऽयाति' इति । इदं ब्रह्मागच्छतीति श्रुत्यन्तरमिति [illegible] (१८.५३.५४) इति गीताऽप्यनुसंधेया ।
इति । अत्र, 'ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा'

तज्जत्वादिना सर्वं खल्विदमिति प्रसिद्धवदुपदेशात्, यस्मात् जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः, तदेवात्र ब्रह्मेति प्रतीयते। वेदान्तप्रसिद्धत्वञ्च परब्रह्मण एव। तस्यैव[1] 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवेदान्तेषु प्रसिद्धेः। तस्य ब्रह्मादिस्तम्बभावेऽपि प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यस्पर्शात्[2] निरस्तसमस्तावद्यत्वस्य नानुपपत्तिः। जीवानाञ्च प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासंभवेन सार्वात्म्यस्यासंभावितत्वात्। अतः सर्वजगत्कारणत्वप्रयुक्तसर्वात्मकत्वस्य परब्रह्मण्येव संभवात् परमेव ब्रह्मेह वाक्ये प्रतिपाद्यते।

'**विवक्षितगुणोपपत्तेश्च**'। विवक्षितानां [3]विशुद्धमनोग्राह्यत्वरूपमनोमयत्वसत्यसंकल्पत्वादीनां गुणानां परमात्मन्येवोपपत्तेश्च। **विवक्षितत्वं** तात्पर्यविषयत्वम्। मनोमयत्वादीनाञ्च, 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' इति वाक्येन[4] मनोमयत्वादिगुणकोपासनेन तद्गुणकब्रह्मप्राप्तेः फलत्वाऽऽवेदनेन फलरूपतात्पर्यलिङ्ग[5]सद्भावात् मनोमयत्वादीनां तात्पर्यविषयत्वलक्षणं विवक्षितत्वमवसीयते। '**अनुपपत्तेस्तु न शारीरः**'। विवक्षितानां गुणानां शारीरेऽनुपपन्नत्वात् न शारीरपरिग्रहशङ्का कार्येत्यर्थः।

'**कर्मकर्तृव्यपदेशाच्च**'। 'एतमितः प्रेत्याभिसंभवितास्मी' ति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः। प्राप्यं परं ब्रह्मोपास्यमिति। '**शब्दविशेषात्**'। 'एष म आत्माऽन्तर्हृदय' इति शारीरः षष्ठ्या निर्दिष्टः; उपास्यस्तु प्रथमया। अतो नोपासकस्य जीवस्योपास्यत्वम्। '**स्मृतेश्च**'। 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च' इति स्मृतिश्चोपास्यं हृदयगतमुपासकाद्भिन्नं परमात्मानं दर्शयति।

'**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च**'। अल्पायतनत्वम**र्भकौकस्त्वम्**। **तद्व्यपदेशः** अल्पत्वव्यपदेशः। 'एष म आत्माऽन्तर्हृदय' इति अणीयसि हृदयायतने स्थितत्वात्, 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादिना स्वरूपेणाणीयस्त्वव्यपदेशाच्च नायं परमात्मा; अपितु जीव एव। परमात्मनोऽल्पायतनत्वाल्पत्वयोरसंभवादिति चेन्न — **एवं निचाय्यत्वात्** अल्पायतनत्वाल्प-

1. तस्यैवेति क. कोशे तद्विहाय तदर्थेऽत्र परब्रह्मण एवेति ख. 2. असंस्पर्शात् ख. 3. विशुद्धमनोग्राह्यत्वरूपेत्यधिकं क. 4. वाक्ये खादन्यत्र. 5. संभवात् ख.

३—१५.

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति ।**

**दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलम् ॥**

**स एष कोशो वसुधानस्तस्मिन् [1]विश्वमिदँ श्रितम् ॥ १ ॥**

1. सर्वं मा.

---

त्वाभ्यां तस्यैवोपास्यत्वसंभवात् । व्योमवच्चेदं ब्रह्म व्यपदिश्यते, 'ज्यायान् पृथिव्याः' इत्यादिना । अतश्च ज्यायस्त्वे उपाध्यश्रवणात् ज्यायस्त्वं स्वाभाविकम्, अणीयस्त्वे उपाधिश्रवणात् अणीयस्त्वमौपाधिकमित्यवसीयते ।

'**संभोगप्राप्तिरिति चेन्न वैशेष्यात्**'। परब्रह्मणः शरीरान्तर्वर्तित्वे तन्निमित्तसुखदुःखोपभोगप्रसक्तिः जीववत् स्यात् इति चेन्न – तयोरपहतपाप्मत्वानपहतपाप्मत्वकृतविशेषसंभवात्। अतो न जीववद् भोगप्रसक्तिरिति स्थितम्॥ प्रकृतमनुसरामः । ॥ ३-१४.

पुत्रदीर्घायुष्यफलकं त्रैलोक्यात्मककोशविज्ञानमारभ्यते । **अन्तरिक्षोदरः – जीर्यति** । अन्तरिक्षमुदरं यस्य स तथोक्तः । मध्यवर्तित्वादन्तरिक्षस्य उदरत्वम् । कोश इव **कोशः** । कोशसादृश्यात् **कोशः** । भूमिः **बुध्नः** मूलं यस्य सः **भूमिबुध्नः** । **न जीर्यति** न विनश्यति । [1]चिरकालस्थायित्वादिति भावः । **दिशो ह्यस्य स्रक्तयः**। **स्रक्तयः** कोणा इत्यर्थः । **द्यौरस्योत्तरं बिलम्** । [2]**उत्तरं बिलं** ऊर्ध्वं मुखमित्यर्थः । **स एष कोशो वसुधानः**। कर्मफलाख्यं वसु धीयतेऽस्मिन् इति **वसुधानः** । **तस्मिन् विश्वमिदं श्रितम्** । कर्मकर्तृफलात्मक**मिदं** परिदृश्यमानं कृत्स्नं [3]**तस्मिन्** कोशे श्रितमित्यर्थः ।

1. स्थिरकालत्वात् ख. चिरकालावस्थायित्वात् ग. 2. अयमर्थः ख. कोशमात्रे । 3. अस्मिन् ख. ग.

---

इतः परमस्मिन् प्रपाठके ऐहिकफलानि चत्वार्युपासनानि। तत्र प्रथमं पुत्रदीर्घायुष्फलकम् । त्रैलोक्यरूपवसुधानकोशस्य अजीर्यत्त्वेन अरिष्टत्वेन स्वदिग्वत्सवायुकत्वेन च विज्ञानात् सपुत्रक एव सदा भवतीति । **कोशसादृश्यादिति** । उदरबुध्नस्रक्तिमुखवत्त्वेन विश्वाख्यवसुमत्त्वेन च

**तस्य प्राची जुहूर्नाम, सहमाना नाम दक्षिणा, राज्ञी नाम प्रतीची, सुभूता नामोदीची । तासां वायुर्वत्सः । स य एतमेवं वायुं दिशां वत्सं वेद, न पुत्ररोदँ रोदिति । सोऽहमेतमेवं वायुं दिशां वत्सं वेद; मा पुत्ररोदँ रुदम् ॥ २ ॥**

**अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना; प्राणं प्रपद्येऽमुनाऽमुनाऽमुना; भूः प्रपद्येऽमुनाऽमुनाऽमुना; भुवः प्रपद्येऽमुनाऽमुनाऽमुना; स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥**

**[1]स यदवोचम्—प्राणं प्रपद्य इति, प्राणो वा इदँ सर्वं भूतम्, यदिदं किञ्च, तमेव तत् प्रापत्सि[2] ॥ ४ ॥**

1. अथ यत् मा. 2. प्राप्स्यथ मा.

---

**तस्य प्राची—नामोदीची** । [1]स्पष्टोऽर्थः । **तासां वायुर्वत्सः** । वायोः दिक्प्रसूतत्वात् वत्सत्वम् । **स य—रोदिति** । दिग्वत्सत्वेन वायूपासकः पुत्रनाश-[2]निमित्तं रोदनं न करोति । पाकं पचतीतिवदयं निर्देशः । **रोद**मिति णमुलन्तो वा । **सोऽह—रुदम्** । **सः** एतदुपदेष्टा अहम् [3]**एव**मेतदुपासनमनुष्ठाय पुत्ररोदनाभावं फलं प्राप्तवानस्मीत्यर्थः ।

अथ कोशविज्ञानाङ्गभूतान् प्रपदनमन्त्रानाह—**अरिष्टं–ऽमुना** । **अरिष्टम्** अविनाशं कोशं प्रपद्ये । **अमुनाऽमुनाऽमुने**ति त्रिः पुत्रस्य नाम गृह्णाति । अमुना पुत्रेण हेतुना अरिष्टं कोशं प्रपद्य इत्यर्थः । एवमुत्तरत्रापि ।

**प्राणं प्रपद्य** इत्यादिस्वोक्तमन्त्रान् [ चतुरः ] स्वयमेव व्याचष्टे । [4] **स यदवोचं—प्रापत्सि** । सोऽहं **प्राणं प्रपद्ये** इति यद् वचनमवोचम् , तेन वचनेन

1. तस्योक्तत्रैलोक्यकोशस्य या प्राची दिक् सा जुहूनाम्ना ध्यातव्येत्यर्थः । एवमेवावशिष्टस्य स्पष्टोऽर्थः ख. 2. नाशननिमित्तं रोदं रोदनं करोति ख. । 3. एवमिति ख. अन्यत्र एवकारः ।

---

सादृश्यम् । **प्राचीदिगा**दिपदं प्राग्भागादिपरम् । **मा–रुद**मिति । रोदनं मे मा भूदिति शाङ्करोक्तार्थे उपासितुरनुसंधानरूपमिदं वाक्यम् । अत्रोक्तार्थे उपदेष्टुरनुभवकथनरूपमिदम् । अरिष्टमिति प्रथममन्त्रस्य अन्तरिक्षोदरः कोश इत्यादिनैव व्याख्यायाः वृत्तत्वात् प्राणमित्यादिरेव पश्चाद् व्याख्यात । **प्रापत्सी**ति शब्दप्रयोगस्वारस्यात् व्याख्यातरीत्याऽनुसंधानमपि मन्त्रप्रयोगानन्तरमुपासकेन कार्यमिति प्रतीयते ।

अथ यदवोचम्—भूः प्रपद्य इति, पृथिवीं प्रपद्ये, अन्तरिक्षं प्रपद्ये, दिवं प्रपद्ये इत्येव तदवोचम् ॥ ५ ॥ अथ यदवोचम्— भुवः प्रपद्य इति, अग्निं प्रपद्ये, वायुं प्रपद्ये, आदित्यं प्रपद्ये, इत्येव तदवोचम् ॥ ६ ॥ अथ यदवोचम्—स्वः प्रपद्य इति, ऋग्वेदं प्रपद्ये, यजुर्वेदं प्रपद्ये, सामवेदं प्रपद्ये इत्येव तदवोचम्, तदवोचम् ॥ ७ ॥

इति तृतीयाध्याये पञ्चदशः खण्डः ।

---

३–१६.

पुरुषो वाव यज्ञः । तस्य यानि चतुर्विंशतिवर्षाणि, तत् प्रातस्सवनम् । चतुर्विंशत्यक्षरा गायत्री; गायत्रं[1] प्रातस्सवनम् । तदस्य वस-

1. गायत्रं हि मा.

---

प्राणात्मकं सर्वं जगत् प्रापत्सि प्रपन्नोऽभवमित्यर्थः । अथ यदवोचं भूः—तदवोचम् । भूः प्रपद्य इत्यस्य[1] त्रीन् लोकान् प्रपद्ये इत्यर्थः । अथ—तदवोचं तदवोचम् । स्पष्टम् । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३–१५.

दीर्घायुष्ट्वफलकपुरुषविद्या प्रस्तूयते—पुरुषो वाव यज्ञः । [2]पुरुषस्य यज्ञसादृश्यमेवाह—

तस्य—प्रातस्सवनम् । षोडशोत्तरवर्षशतमिते पुरुषायुषे आद्यानि चतुर्विंशतिवर्षाणि प्रातस्सवनमित्यर्थः । तत्र तद्दृष्टिः कर्तव्येति यावत् । तत्र हेतुमाह चतुर्विंश—सवनम् । प्रातस्सवनस्य गायत्रीछन्दस्कत्वात्, गायत्रीछन्दसश्चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षे प्रातस्सवनत्वाध्यासो युज्यत इति भावः । तदस्य वसवोऽन्वायत्ताः । अस्योपासकस्य तत् प्रातस्सवनं वसवः स्वामित्वेनानुगताः ।

1. इत्यस्य मन्त्रस्य ख. 2. पुरुषः स्वस्मिन् यज्ञदृष्टिं कुर्यादित्यर्थः इत्यधिकं ग.

---

स्वायुर्मध्ये पुत्रामरणार्था कोशविद्योपदिष्टा । अथ स्वदीर्घायुःफला पुरुषविद्योपदिश्यते । एतद्विद्यायाः षोडशाधिकवर्षशतजीवनफलकत्वम् अस्याः यज्ञभावनारूपत्वात्, यज्ञे च सोमे सवनत्रयसंबन्धिच्छन्दस्त्रयगताक्षराणां संहत्य तावत्संख्यकत्वादाहृतम् । तत्संख्यानुरोधेनैव सवनत्रयविभागोऽपि कृतः । सोमे च यज्ञदिनस्य सवनत्रयात्मकत्वात् तत्र क्रियमाणस्य यज्ञस्य प्रधानत्वात् दीक्षादीनाञ्चाङ्गत्वात् तद्रीत्या इहापि पुरुषे यज्ञभावना तदायुर्भागेषु सवनत्रयभावनोपस्कृता प्रधानम् । तत्फलं तावद्वर्षजीवनम् । तदङ्गजातञ्च पुरुषसंबन्ध्यशिशिषादिषु दीक्षादित्वचिन्तनाः । ताश्चाङ्गत्वात् पृथगुत्तरखण्डेन कथ्यन्ते ।

वोऽन्वायत्ताः । प्राणा वाव वसवः । एते हीदँ सर्वँ वासयन्ति ॥ १ ॥

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात् 'प्राणा वसवः इदं मे प्रातस्सवनं। माध्यन्दिनँ सवनमनु संतनुते'ति। 'माऽहं प्राणान वसूनां मध्ये यज्ञो विलोप्सीये'ति। उद्धैव तत एति, अगदो ह भवति॥ २ ।

अथ यानि चतुश्चत्वारिँशद्वर्षाणि, तन्माध्यन्दिनँ सवनम् । चतुश्चत्वारिँशदक्षरा त्रिष्टुप्; त्रैष्टुभं माध्यन्दिनँ सवनम् । तदस्य रुद्रा अन्वायत्ताः । प्राणा वाव रुद्राः । एते हीदँ सर्वँ रोदयन्ति ॥ ३ ॥

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा रुद्राः इदं मे माध्यन्दिनँ सवनं तृतीयसवनमनु संतनुते'ति। माऽहं प्राणान

प्रसिद्धयज्ञे प्रातस्सवनस्य वसुस्वामिकत्वादिति भावः । प्रसिद्धान् वसून् व्यावर्तय **प्राणा वाव वसवः** । वावशब्दोऽवधारणे । प्राणानां वसुत्वे युक्तिमाह **एते ही सर्वँ वासयन्ति** । शरीराणामशैथिल्यलक्षणवासस्य प्राणाधीनत्वादिति भावः **तं चेत्—तपेत्** । तं पुरुषविद्यानिष्ठम्, **एतस्मिन् वयसि** चतुर्विंशतिवर्षात्मक वयसि **किञ्चित्** रोगादिकम् **उपतपेत्** बाधेत चेदित्यर्थः । **स ब्रूयात्—विलोप्सीयेति** । तदा इमं मन्त्रं स उपासको **ब्रूयात्** जपेत् । हे प्राणा वसवः! यज्ञरूपस्य ममाधुना प्रातस्सवनं प्रवर्तते । इदं प्रवर्तमानं प्रातस्सवनं माध्यन्दिनसवनेन विच्छिन्नं कुरुत । प्रातस्सवनेशानां प्राणानां वसूनां मध्ये = [1]तेषु पश्यत्सु, यज्ञरूपोऽ **मा विलोप्सीय** लुप्तो मा भूवम् । छान्दसो माङि लुङभावः । माशब्दो वा **उद्धैव—भवति** । ततः उपतापात् **उदेति** उद्गच्छति । **अगदो भवति** अरोग भवति[2] । एवमुत्तरत्रापि ।

**अथ यानि—रोदयन्ति** । [3]यौवने इन्द्रियाणामत्यन्तं विषयप्रावण्यजन कतया पुरुषान् रोदयन्तीति रुद्रत्वमुपपन्नमित्यर्थः । **तं चेद्—। एतस्मिन् वया**

1. तेषु पश्यत्सु इत्यधिकं क. 2. भवतीत्यर्थः ख. 3. यौवनेत्यादिपङ्क्तिषट्कस्थ 'स्पष्टोऽर्थ' इति. क.

---

**वासयन्तीति**शब्दप्रयोगः वसुशब्दार्थस्य प्रकृते समन्वयाय । वास इह स्थितिः सत्त **यज्ञो विलोप्सीयेति** । षोडशवर्षशतात्मकसवनत्रयसंततो हि पुरुषयज्ञः मध्ये व्याध्यादि पुरुषलोपे लुप्तः स्यात् । अतो वस्वादित्वेन भावितेषु प्राणेषु प्रसक्तयज्ञविलोपनिवर्तकत्वमं भावनीयम् ।

रुद्राणां मध्ये यज्ञो विलोप्सीयेति। उद्धैव तत एति ; अगदो ह भवति॥ ४॥

अथ यान्यष्टाचत्वारिँशद्वर्षाणि, तत् तृतीयसवनम्। अष्टाचत्वारिँ-शदक्षरा जगती। जागतं तृतीयसवनम्। तदस्याऽऽदित्या अन्वायत्ताः। प्राणा वाव आदित्याः। एते हीदँ सर्वमाददते॥ ५॥

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा आदित्याः इदं मे तृतीयसवनम् आयुरनु संतनुते'ति। 'माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीये'ति। उद्धैव तत एति ; अगदो हैव भवति॥ ६॥

एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः, 'स किं म एतदुप-

---

चतुर्विंशतिवर्षादूर्ध्वम अष्टषष्टिवर्षमध्ये इत्यर्थः। **प्राणानां रुद्राणां मध्ये** माध्यन्दिनसवनेशानां भवतां मध्ये इत्यर्थः।

**अथ यान्यष्टाचत्वारिंशद्वर्षा**–। **प्राणा वा आदित्याः एते हीदं सर्वमाददते**। सर्वस्य विषयजातस्याऽऽदानात् प्राणानामादित्यत्वमित्यर्थः। **तं चेत्**–। **एतस्मिन् वयसि** अष्टषष्टिवर्षादूर्ध्वं षोडशोत्तरशतवर्षमध्य इत्यर्थः। **तृतीयसवनमायुरनुसंतनुतेति**। तृतीयसवनात्मकमायुः आसमाप्ति अविच्छिन्नं कुरुतेत्यर्थः। **प्राणानामादित्यानां मध्ये** तृतीयसवनस्वामिनां भवतां मध्ये इत्यर्थः।

**एतद्ध—न प्रैष्यामीति**। हे रोग! स त्वं **मे** मां **किं** कस्मात् **एतत्** एवम्प्रकारेण उपतपसि, योऽहं पुरुषविद्यानिष्ठः त्वत्कृतेनानेनोपतापेन **न प्रैष्यामि** न मरिष्यामि। अतस्तव श्रमो वृथैवेति, **एतत्** पुरुषविज्ञानस्वरूपं **विद्वान्** इतरपुत्रो महिदासनामा, आह स्मेत्यर्थः। **ऐतरेयः**। शुभ्रादित्वात् इतरशब्दात् अप-

---

**इतरपुत्र** इति। एवमेव सर्वत्र पाठः। शुभ्रादिगणेऽपि **इतरशब्दः** ह्रस्वान्त एव पठितोऽस्ति। शाङ्करभाष्ये, 'इतरायाः पुत्र' इत्युक्तम्। तत ऐतरेयब्राह्मणभाष्यभूमिकायामपि कस्यचिन्महर्षेर्बह्वीषु भार्यासु इतरानामधेया काचिदिति संप्रदायविद इति सायणेनोक्तम्। एवंसति 'स्त्रीभ्यो ढक्' इति ढक् अत्र न प्राप्नोति। किन्तु तदपवादः, 'अबृद्धाभ्य—' इति अणेव। शुभ्रादिगतेतरपदेन स्त्रीप्रत्ययान्तस्यापि विवक्षासंभवे तु ढक् स्यात्। एवंसति इहापि गणपाठगतेतरशब्दार्थो यो जनः, तत्पुत्र इत्यर्थो विवक्षणीयः स्यात्। स्वरसतस्तु गणपाठगतपुल्लिङ्गेतरशब्दबलात् ऐतरेयपितुरेव इतरेति नाम, न मातुरिति पाणिन्याशये स्थिते तद्विरुद्धौ व्याख्यानसंप्रदायौ न विश्वसनीयाविति भाष्याशय उन्नीयते।

**तपसि, योऽहमनेन न प्रैष्या[1]मी' ति । स ह षोडशं वर्षशतमजीवत् ।**
**[2]प्र ह षोडशं वर्षशतं जीवति, य एवं वेद ॥ ७ ॥**

इति तृतीयाध्याये षोडशः खण्डः ।

---

## ३—१७.

**स यदशिशिषति, यत् पिपासति, यन्न रमते, ता अस्य दीक्षा[3] ॥ १ ।**
**अथ यदश्नाति, यत् पिबति, यद् रमते, तदुपसद्भिरेति ॥ २ ॥**
**अथ यद्धसति, यज्जक्षति, यन्मैथुनं चरति, स्तुतशस्त्रैरेव तदेति ॥ ३ ।**
**अथ यत् तपो दानमार्जवमहिंसा सत्यवचनमिति, ता अस्य दक्षिणाः[4] ॥ ४ ॥**

1. प्रेष्यामि **शां. मा.** 2. स ह **मा.** 3. दीक्षाः. पा. 4. एतदनन्तरं ददात्यात्मदक्षिणं वैतत् सत्रमिति इत्यधिकं माध्वमूले । न तु व्याख्याने ।

---

त्यार्थे ठक् । **स—शतमजीवत्** । सः महिदासः **षोडशं** षोडशाधिकं वर्षशतमजीवदित्यर्थः । 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति षोडशशब्दात् डप्रत्ययः ॥ [अतो विद्यायां फलप्रापकत्वनिश्चयवतोऽवश्यं फलप्राप्तिर्भवतीति भाव ।] अन्योऽप्येवंवित् षोडशं वर्षशतं जीवतीत्याह **प्र ह—वेद** । [स्पष्टोऽर्थः] ३—१६

[तथा पुरुषस्य यज्ञसादृश्यमेव निरूपयति]—**स यत्—दीक्षा** । अशनायापिपासारत्यभावानां दुःखात्मकत्वेन दीक्षात्वम् [कल्प्यमित्यर्थः] । **अथ यत्—एति** । अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत् सुखरूपत्वात् उपसद्रूपत्वम् । **उपसद्भिरेति** उपसद्भिः साम्यमेति । उपसद्दृष्टिस्तासु [अशनपानरतिषु] कर्तव्येत्यर्थः । **अथ यद्धसति—तदेति** । हासादीनां[1] शब्दवत्त्वसाम्यात् स्तुतशस्त्रैः साम्यमेतीत्यर्थः । **अथ यत् तपः—दक्षिणाः** । दक्षिणादृष्टिस्तेषु कर्तव्येत्यर्थः । धर्मपु[2]ष्टिकरत्वसाम्यादिति भावः ।

1. हासभक्षणमैथुनादीनाम् **ख.** 2. तुष्टि **क.**

---

**प्र हेति** । प्रजीवति । प्रकर्षो रोगाद्युपतापराहित्यम् ।

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥**

---

तस्मादाहुः, 'सोष्यति, असोष्टे'ति पुनरुत्पादनमेवास्य [ तत्? ]। यतो हेतोः पुरुषस्यैव यज्ञरूपत्वम्, अत एव, यथा यज्ञं करिष्यमाणे पुरुषे 'देवदत्तः सोमं सोष्यती' ति प्रयुञ्जते, तथा–यदा माता तं पुरुषं जनयिष्यति तदा पुरुषस्योत्पादनं प्रतीक्ष्य – 'पुरुषं सोष्यती' ति प्रयुञ्जते लोकाः। [1]यागानन्तरम् 'असोष्ट सोमं यज्ञदत्त' इतिवत्, 'असोष्ट माता पुरुषम्' इति उत्पत्तेः पश्चात् प्रयुञ्जते । अतश्च पुरुषस्योत्पादनमेव 'सोष्यति', 'असोष्टे' ति शब्दसंबन्धित्वसामान्यात् यज्ञानुष्ठानलक्षणमुत्पादनमित्यर्थः । [2]यज्ञपक्षे षुञ् अभिषवे इति धातुः; उत्पत्तिपक्षे षूङ् प्राणिप्रसव इति धातुः। **तन्मर ( मर?) मरणमेवावभृथः।** समाप्तित्वसाम्यात् मरणे अवभृथत्वं पश्येदिति भावः ।

1. यागाद्यनन्तरं क. 2. यज्ञपक्ष इत्यादिः धातुविवेकभागः क. कोशे. ।

---

नन्वशिशिषादौ दीक्षादित्वकल्पनायां दुःखात्मकत्वादिसाम्यं प्रयोजकमुन्नीयते। चेतने पुरुषे द्रव्ये अचेतनयज्ञक्रियात्वकल्पनायां किं साम्यमित्यत्र साम्यं किञ्चित् श्रुतिर्दर्शयति **तस्मादाहुरिति** । ननु सोमं सोष्यतीत्यत्र सवने अभिषवे सोमो लता कर्म; न तु यज्ञः । तेन पुरुषे द्रव्यसाम्यं स्यात्; न यज्ञसाम्यम्। तत्राह **पुनरुत्पादनमेवास्य तत्**। यज्ञस्योत्पादनमेव तु **तत्** सोमद्रव्यसवनम्। **पुनश्शब्दः** त्वर्थे। वस्तुतोऽभिषवयागयोर्भेदेऽपि अदूरविप्रकर्षात्, चरुं निर्वपति, पशुमालभते, सोमं सौतीति इष्टिपशुसोमयागोत्पादनेषु परिभाषणं प्रसिद्धमिति भावः। भवति च सोमद्रव्याभिषवस्य यज्ञोत्पत्त्यनुकूलव्यापारतया स यज्ञोत्पादनमेवेति, पुरुषोत्पादनं यज्ञोत्पादनमिति। अस्य वाक्यस्य विधेयोद्देश्यवाचिपदद्वयसापेक्षत्वात् **तदि**त्यस्य अत्रैव घटनं युक्तम्। उत्तरवाक्ये तत् अनपेक्षितञ्च । एवमेव भाष्याकूतं स्यात् । पुरुषोत्पादनमेव यज्ञोत्पादनमिति मूलार्थेऽपि तात्पर्यं पूर्वोक्तं ग्राह्यम्। **पुनरि**त्येतत् पूर्ववाक्येऽप्यान्वियात्। तदा चार्थकम्।

**तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच, अपिपास**

**तद्धैतत्**—**उवाच** । घोरनामा अङ्गिरोगोत्रः कश्चिदृषिः **तदेतत्** पुरुषयज्ञदर्शनं **देवकीपुत्राय कृष्णाय**—इति शब्दोऽध्याहर्तव्यः— [1]कृष्णशेषभूतम्, तत्प्रीत्यर्थमित्युक्त्वा इत्यनुसंधाय **उवाच** अनुष्ठितवानित्यर्थः । वचेर्लक्षणयाऽनुष्ठानार्थत्वम् । **अपिपास एव स बभूव** । **सः** घोरनामा भगवच्छेषत्वानुसंधानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन ब्रह्मविद्यां प्राप्य **अपिपासः** – [ इदमुपलक्षणमपहतपाप्म

1. इदं ख. कोशे ।

**कृष्णायेति** । ननु श्रीदेवकीपुत्रश्रीकृष्णवत् भक्तिधारिततन्नामदेवक्यन्तरपुत्रकृष्णान्तरस्यापि संभावितत्वात् कस्यचित् शिष्यभूतस्य कृष्णस्य ग्रहणेन **समञ्जसे** वाक्यार्थे किमिति भाष्ये परमात्मग्रहणम्, इतिशब्दाध्याहारः, **उवा**चेत्यस्यानुष्ठाने लक्षणा, **अपिपास** इत्यस्य मुक्ते लक्षणा चेति चेत् – सत्यम् । अस्तु तावत् सान्दीपनेरिव घोरस्यापि शिष्यः श्रीकृष्ण इति; अस्तु वा तन्नामाऽन्यः कृष्ण एवेह । तथापि कोऽसौ समञ्जसो वाक्यार्थः? पुरुषविद्यारूपविज्ञानं कृष्णाय शिष्यायोक्त्वोवाचेत्यत्र **उवाचे**त्यस्य किं कर्म? **अपिपास** इत्यादेः न तत्कर्मत्वं संभवति । **सोऽन्तवेलाया**मित्यादेः कर्मत्वे व्यवहितान्वयापत्तिः । अपिपास इत्यादेश्च कस्तदाऽर्थः । कृष्णो विद्यान्तराधिजिगमिषारूपपिपासारहितो बभूवेत्यर्थ इति **चेत्** – स इत्यस्याप्रधानपरामर्शित्वापत्तिः; पिपासापदलक्षणा च । **ननु** ५–२–३, स्थल इव **अपिपास** इत्यादिकं सर्वमेव उवाचेत्यस्य कर्म । **सः** पुरुषविद्यानिष्ठः **अपिपासः** रोगादिरहितः सुखजीवी **बभूव** भवेत् । 'छन्दसि लुङ्लङ्लिटः' इति लिङर्थे लिट् । 'प्रोवाच तां तत्त्वतो ब्रह्मविद्या' मितिवत् इति चेत् – अशनाया पिपासा च **यथाकालं** यस्य, स खलु सुखजीवी । न त्वपिपासो मन्दाग्निः । तत् कथं तदर्थयोगः? पिपासाशान्त्यर्थवस्त्वलाभप्रयुक्तपिपासापीडारहित इति तदर्थं इति चेत् – लक्षणैव दोषः । एतादृशार्थवर्णने च **अपिपास एव स बभूवे**त्यस्य **सोन्तवेलाया**मित्यादेश्च न कश्चित् संबन्धोऽस्ति । षोडशाधिकवर्षशतजीवनरूपफलस्य प्रागेतदकरणेऽपि लभ्यतया अन्तवेलायां विहितस्य एतत्त्रयजपस्य पुरुषविद्याङ्गत्वानुपपत्तिश्च । अतः अधस्तात्, 'महिदास आह; स ह षोडशं वर्षशतमजीवत्' इतिवत् 'घोर उवाच, अपिपास एव स बभूवे' ति प्राचीनपुरुषव्यापारस्य साफल्यप्रदर्शनेन प्ररोचकमिदं वाक्यं युक्तम् । तदा च बभूवेत्येतन्न लाक्षणिकम् । एवञ्च **तद्धैत**दिति वाक्यस्यैवमवतरणम् । **ननु किमनेन** षोडशवर्षशतजीवनेन पश्चात्तनपुरुषार्थानुपयोगिना? तत्राह **तद्धैत**दिति । पुरुषविद्यानिष्ठ एव घोर आङ्गिरसः अपिपासोऽपि बभूव । यत्तत् प्रेतीभूतस्य पिपासा कापि भवतीति वदन्ति तद्रहितो बभूव । 'यदु चैवास्मै शव्यं कुर्वन्ति, यदु च ने' त्युक्तरीत्या प्रेतभावाद्यभावात् अपिपासो मुक्तो बभूवेति । ननु पुरुषविद्यारूपदहरविधिप्रवृत्तस्य परब्रह्मचिन्तारहितस्य कथं मुक्तिरिति शङ्कानुन्मेषाय अपिपासभावप्रयोजकाकारप्रदर्शकं कृष्णाय देवकीपुत्रायोक्त्वोवाचेति

**एव स बभूव, सोऽन्तवेलायामेतत् त्रयँ प्रतिपद्येत, 'अक्षितमसि,' 'अच्युतमसि,' 'प्राणसँशितमसी'ति ।**

---

त्वादिगुणाष्टकस्य ] – मुक्तो बभूवेत्यर्थः । ततश्च षोडशाधिकवर्षशतजीवनफलकस्यापि पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसंधानपूर्वकमनुष्ठितस्य ब्रह्मविद्योपयोगित्वमप्यस्तीति भावः । [1]यद्वा **स बभूवे**त्यस्य स भवतात्यर्थः । **सोऽन्तवेलाया**मित्यत्र स इत्यस्य य इत्यर्थः । ततश्च योऽन्तवेलायामेतत्त्रयं प्रतिपद्येत, सोऽपिपासो भवतीत्युत्तरत्रान्वयः । [ [2]पुरुषविद्यानिष्ठस्यान्त्यकाले जप्यान् मन्त्रानाह -- ] **सोऽन्त— प्रतिपद्येत । सः** भगवच्छेषत्वानुसंधानपूर्वकपुरुषविद्यासाधितचिरायुष्ट्वानुगृहीतब्रह्मविद्यानिष्ठः पुरुषः **अक्षितमसि, अच्युतमसि, प्राणसंशितमसि** इत्येतन्मन्त्रत्रयं मरणकाले जपेदित्यर्थः । **अक्षितमसि** क्षयशून्यमसि । **अच्युतमसि** स्वरूपस्वभावप्रच्युतिशून्यमसि । **प्राणसंशितमसि** जगत्प्राणयितृत्वे सति **संशितं** सूक्ष्मतत्त्वमसीति ब्रह्म[3]संबोधनम् । शो तनूकरण इति हि धातुः ।

1. इदं ग कोशे घ. कोशे च । ग. कोशे यद्वा इति न । 2. इदं क. कोशे । 3. ब्रह्मणः क. ।

---

वाक्यम् । अतस्तदर्थं एवमेव वर्णनीय इति । एवञ्च **उवाचे**त्यस्यानुष्ठानलक्षणायां न 'सोऽन्तवेलाया'मित्यादिना व्यवहितेनान्वय इति दोषोऽपि । ननु श्रीकृष्णप्रीत्यर्थं पुरुषविद्यानुष्ठाने तस्य निष्कामकर्मणः चिरायुष्ट्वरूपं फलं कथमिति चेन्न – पुरुषविद्यासंपादितस्यायुषः श्रीकृष्णार्थतयैव तदनुष्ठानात् । नन्वेवं पुरुषविद्यानिष्ठेनानुष्ठीयमाना का सा ब्रह्मविद्या, यतो मोक्षो भवेदित्यत्राह **सोऽन्ते**त्यादि । अन्तिमप्रत्ययोपयोगितया अन्तवेलायामस्यैतन्मन्त्रत्रयार्थानुसंधानं तदर्थजपादिकं श्रीकृष्णानुग्रहबलाद्भवेदित्युक्त्या पुरुषविद्यानिष्ठः स्वायुषि एतन्मन्त्रत्रयजपपरः स्यादिति सूच्यते । अत्रेदं बोध्यम् – 'नात्र कृष्णपदेन शिष्यो ग्राह्यः । नाप्युवाचेत्यस्य मुख्यार्थ आदर्तव्यः । नापि बभूवेत्यस्य भवेदित्यर्थो ग्राह्य' इत्यत्र न भाष्यकृतां निर्भरः । किंतु पुरुषविद्यानिष्ठेनापि परं ब्रह्म प्राप्यते तदायुर्द्वारेत्यर्थं इह विवक्षणीयः, उपरि ऋग्द्वयोदाहरणाद्यनुरोधादित्यलैव । तथाच घोर आङ्गिरसः स्वशिष्यं कश्चित् प्रति पुरुषविज्ञानमुपदिश्योपर्येवमुवाच । किमिति ? 'सोऽयं पुरुषविद्यानिष्ठो मुक्त एव भवति । कथमिति चेत् – अन्तवेलायामेतन्मन्त्रत्रयार्थानुसंधाना'दिति वाक्यार्थवर्णनेऽपि न नो विद्वेषः । समानतात्पर्यादिति । इदमेव **यद्वे**त्यादियोजनान्तरेण दर्शितमपि स्यात् । एवं तत्र तच्छब्दस्य यच्छब्दार्थवर्णनेऽप्यनिर्भरो द्रष्टव्यः ।

**तत्रैते द्वे ऋचौ भवतः—**
**आदित् प्रत्नस्य रेतसः— ॥**
**उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम्**
**स्वः पश्यन्त उत्तरम् ।**

---

**तत्रैते द्वे ऋचौ भवतः ।** **तत्र** परब्रह्मविषये एतौ [1]ऋङ्मन्त्रौ भवत इत्यर्थः। **आदित् प्रत्नस्य रेतसः** । तयोः ऋचोरयमाद्यो मन्त्रः प्रतीकेन गृहीतः। 'आदित् प्रत्नस्य रेतसः ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवि ' इति। **प्रत्नस्य** पुरातनस्य **रेतसः** जगद्बीजभूतस्याव्यक्तस्य **आदित्** आदिभूतम्, संसारसंतमसनिवारकतया ज्योतिश्शब्दितं परं ब्रह्म, 'सदा पश्यन्ति सूरयः ' इत्युक्तरीत्या नित्यसूरयः [2]**वासरं** नित्यप्रकाशरूपं सर्वकालं **पश्यन्तीत्यर्थः** । **यत्** ज्योतिः, 'अथ यदतः परो दिवो ज्योतिर्दीप्यते ' इत्युक्तरीत्या **दिवि** भगवल्लोके परत्वेन **इध्यते** निरतिशयदीप्तियुक्तविग्रहयुक्तमित्यर्थः ।

**उद्वयं—ज्योतिरुत्तममिति** । **तमसः प्रकृतेः** परस्तात् **उत्तरं ज्योतिः** परब्रह्म परिपश्यन्तः, **उत्तरं** सर्वलोकोर्ध्वं **स्वः** भगवल्लोकं परिपश्यन्तः — अत्र **परिपश्यन्त** इत्युभयत्र हेत्वर्थे शतृप्रत्ययः । भगवल्लोकस्य तद्गतपरमात्मनश्च दर्शना-

1. एतौ ऋचौ मन्त्रौ ख. 2. **घ.** कोशे 'नित्यसूरयः पश्यन्ति ' इत्येतावदेव । 'वासरं नित्यप्रकाशरूप'मिति नास्ति **क.** कोशे ।

---

**प्रतीकेन गृहीतः** इति । नन्वत्र षण्णां पादानां श्रवणात् गायत्रीच्छन्दस्कमृग्द्वयमिदमित्येव कस्मान्न भवतीति चेन्न — तादृशक्पाठस्य कुत्राप्यदर्शनात् । अत्र प्रथममन्त्रे अन्ते 'दिवा' इति ऋग्वेदपाठः शाङ्करादृतः । अस्य सामवेदोपनिषत्त्वात् '**दिव**' इति सामवेदीयपाठ एवात्रादृत इति विशेषः । ननूपरि कथं पञ्चपात् एका ऋक् इति चेन्न । तत्र 'ज्योतिः पश्यन्त उत्तरम्' इति ऋग्वेदादृतद्वितीयपादस्थाने शुक्लयजुर्वेदादृतो द्वितीयः पादः, '**स्वः** पश्यन्त उत्तरम्' इति । तद्घटितस्यापि प्रकृते उदाजिहीर्षयाऽधिकोक्तिः । तथाच चतुष्पदैव सा ऋगिति । एवं, '**रोहन्तो नाकमुत्तमम्** ' इत्यथर्ववेदादृतद्वितीयपादोऽपि भाव्यः । एवमृग्द्वयोदाहरणेन पुरुषविद्यानिष्ठोऽन्तत एवं मुक्तिमाप्नोतीति श्रुत्या विशदीक्रियते । '**मन्त्रद्वयमिदं न जप्यम्** । किन्तु उक्तार्थसाक्षिभूत'मिति शाङ्करे । ऐतरेये तु मुमूर्षोरिमौ मन्त्रौ जप्यावेवोक्तौ ( )।

**देवं देवत्रा सूर्यमगन्मज्योतिरुत्तमम् ॥ इति, ज्योतिरुत्तममिति ।**

इति तृतीयप्रपाठके सप्तदशः खण्डः

येति यावत्—**देवत्रा** देवेषु—'देवमनुष्ये'त्यादिना [1]सप्तम्याः त्राप्रत्ययः—**देवं** द्योतमानम्[2] **उत्तमम्** अचिरादिपर्वभूतम्[3] सूर्यरूपं ज्योतिः [4]**वयमुदगन्म** उद्गत्य प्राप्ताः स्मः इत्यर्थः । द्विरभ्यासो यज्ञकल्पनासमाप्त्यर्थः ॥

एतत्खण्डांतर्गतवाक्यविषयकमधिकरणं लिख्यते —

गुणोपसंहारपादे-- तैत्तिरीयके, 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी[5]—' इति श्रुतायाः पुरुषविद्यायाः, 'पुरुषो वाव यज्ञः' इति छान्दोग्याम्नाता पुरुषविद्या न भिन्ना । पुरुषविद्येति समाख्यैक्यात् । पुरुषसंबन्धिषु यज्ञावयवत्वक-ल्पनासाम्यात् । मरणावभृथत्व[6]साम्याच्च इति पूर्वपक्षे प्राप्ते उच्यते—

**'पुरुषविद्यायामपि चेतरेषामनाम्नानात्'**। उभयत्राम्नातयोः पुरुषविद्यात्वे-ऽपि विद्याभेदोऽस्त्येव । कुतः? **इतरेषामनाम्नानात्** । 'यत् सायं प्रातर्मध्यन्दिनञ्च तानि सवनानी'त्यादीनां तैत्तिरीयकाम्नातानां छान्दोग्येऽनाम्नानात् । त्रेधाविभक्त-पुरुषायुषस्यैव छान्दोग्ये सवनत्वाम्नानात् । छान्दोग्यश्रुताशिशिषादिदीक्षादित्वपरिक-ल्पनस्य तैत्तिरीयके अदर्शनात् । यजमानपत्न्यादिपरिकल्पनानाञ्च भिन्नभिन्नत्वात् ।

छान्दोग्ये, 'पुरुषो वाव यज्ञ' इति श्रुतस्य पुरुषे यज्ञत्वकल्पनस्य तैत्तिरीयके अदर्शनाच्च विद्याभेद एव । न च, 'तस्यैवं विदुषो यज्ञस्ये'त्यत्र षष्ठ्यन्तयोः सा-मानाधिकरण्याश्रयणेन पुरुषे यज्ञत्वकल्पनं तैत्तिरीयकेऽप्यस्तीति वाच्यम् – पुरुष-स्यैव, यज्ञत्वे तस्यैव यजमानत्वं विरुद्धम् । यज्ञत्वयजमानत्वयोरेकस्मिन् विरोधात् । किञ्च पुरुषे यज्ञत्वकल्पने हि, 'विद्वान् यज्ञः, आत्मा यजमान' इत्येव वक्तव्यं स्यात्; न तु एकवाक्यतया, 'विदुषो यज्ञस्यात्मा यजमानः' इति । अतो 'विदुषो यज्ञ-स्ये'ति व्यधिकरणे षष्ठ्यौ । विद्वत्संबन्धियज्ञस्येत्यर्थः । ततश्च, 'प्रणव एव विस्वरः' इति न्यायेन पुरुषस्य यज्ञत्वकल्पनैकरूप्याभावात् विद्याभेद एव ।

1. सप्तम्यन्तात् ग. 2. उत्तरम् ख. 3. अर्चिरादि पूर्वभूतं घ. अर्चिसर्वभूतं ख. 4. द्वयं ख. 5. अत्र ख कोशे पूर्णश्रुतिराम्नाताऽस्ति । 6. 'त्व' इति न ख. कोशे ।

**अधिकरणं लिख्यत** इति । विदुषो यज्ञस्येत्यस्य अत्र कृतादधिकोऽर्थविवेकः तैत्तिरीय-भाष्ये कृतो द्रष्टव्यः । अन्योऽपि विशेषस्तत्र तत्परिष्कारे च ॥

३—१८.

मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् । अथाधिदैवतम् । आकाशो ब्रह्मेति । उभयमादिष्टं भवति अध्यात्मञ्चाधिदैवतञ्च ॥ १ ॥

तदेतच्चतुष्पाद् ब्रह्म ।

वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं पाद इत्यध्यात्मम् अथाधिदैवतम् — अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति । उभयमेवादिष्टं भवति अध्यात्मञ्चैवाधिदैवतञ्च ॥ २ ॥

वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना ज्योतिषा भाति च तपति

---

किञ्च छान्दोग्याम्नातायाः पुरुषविद्यायाः, 'प्र ह षोडशं वर्षशतं जीवति' इति षोडशाधिकवर्षशतजीवनं फलत्वेनाम्नातम् । तैत्तिरीयके तु श्रुतायाः पुरुषविद्यायाः 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वानुवाकविहितायाः ब्रह्मविद्यायाः 'ब्रह्मणो महिमानमाप्नोति' इति ब्रह्मप्राप्तिफलिकायाः संनिधौ पठितत्वात् ब्रह्मविद्याङ्गतया ब्रह्मप्राप्तिफलकत्वमेव । अतः फलसंयोगभेदाच्च पुरुषविद्ययोर्भेद इति सिद्धान्तितम् ॥ प्रकृतमनुसरामः ॥ ३—१७

अध्यात्मं मनसि, अधिदैवतमाकाशे च ब्रह्मदृष्टिरुपदिश्यते — **मनो ब्रह्म** — । **आदिष्टं भवति** । उपदिष्टं भवतीत्यर्थः । शिष्टं स्पष्टम् । **तदेतच्चतुष्पाद् ब्रह्म** । **तदेतत्** मनआख्यं ब्रह्म चतुष्पात् । कथं मनोरूपस्य ब्रह्मणश्चतुष्पात्त्वमित्यत्राह **वाक् पादः—श्रोत्रं पादः** । वागादीनां चतुर्णां मनोनियाम्यत्वात् मनःपादत्वाध्यासो युक्त इति भावः । **इत्यध्यात्मम्** । उक्तमिति शेषः । **अथाधिदैवतम्** । उच्यत इति शेषः । **अग्निः—पादः** । अग्न्यादयश्चत्वारः ब्रह्मरूपाकाशस्योदरलग्नाः पादा इव भान्ती (भवन्ती)त्यर्थः । **इत्युभयमेव — च** । स्पष्टोऽर्थः ।

**वागेव — तपति च** । अध्यात्मं ब्रह्मरूपस्य मनसः वागेव चतुर्थः पादः । सोऽधिदैवतं ब्रह्मरूपाकाशपादतया तत्संबन्धिनाऽग्निना **ज्योतिषा** प्रकाशकेन **भाति** प्रकाश (श्य) ते । **तपति** स्वकार्योत्साही भवतीत्यर्थः । 'अग्निर्वाग् भूत्वा मुखं

च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ॥ ४ ॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः । स आदित्येन ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ॥५॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः । स दिग्भिर्ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ६ ॥

इति तृतीयाध्याये अष्टादशः खण्डः ।

---

प्राविश 'दिति अग्निदेवताया एव वागधिष्ठातृत्वेन तदधीन[1]प्रकाशप्रवृत्तिकत्वादिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् । **भाति च— वेद** । वितरणविक्रमरूपहेतुभेदात् कीर्तियशसोर्भेदः । **ब्रह्मवर्चसं** वृत्ताध्ययनसमृद्धिः । शिष्टं स्पष्टम् । **प्राण एव—वायुना ज्योतिषा भाति**··· । वायुप्राणयोरेकतत्त्व[2]त्वादिति भावः । **चक्षुरेव—आदित्येन—** । आदित्यस्य चक्षुरधिष्ठातृत्वादिति भावः । **श्रोत्रमेव — दिग्भिः—** । 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति दिग्देवतानां श्रोत्राधिष्ठातृत्वादिति भावः । अवशिष्टस्योक्तोऽर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३—१८.

1. प्रवृत्तिप्रकाश क. 2. एकवृत्तित्वा क.

---

**वितरणविक्रमे**ति । इदं **टीकातत्त्वटीकयोरुक्तम्** । **भाति च तपति चे**ति । अत्र कीर्त्या यशसा भाति, ब्रह्मवर्चसेन तपतीति योज्यमिति **तत्त्वटीका** । **वायुना ज्योतिषे**ति । वायोर्ज्योतिष्ट्वं प्राणभानकरत्वात् । वागादेरग्न्यादिरिव न प्राणस्य वायुर्देवता । अथापि तस्य तादधीन्योक्तिः तद्विकारत्वादित्याशयेनाऽऽह **एकतत्त्वत्वादिति** । इदञ्च प्राणोऽयं मुख्यप्राण इत्याशयेन । प्राणो घ्राणमिति तु शाङ्करे । तदाऽपि न वायुर्देवता । किन्तु 'वायुर्गन्धानिवाशयात्' इति न्यायेनोपकारी ॥

## ३--१९.

**आदित्यो ब्रह्मेत्यादेशः । तस्योपव्याख्यानम्—**

**असदेवेदमग्र आसीत् । तत् सदासीत् । तत् समभवत् । तदाण्डं निरवर्तत । तत् संवत्सरस्य मात्रामशयत । तन्निरभिद्यत । ते आण्डकपाले रजतञ्च सुवर्णञ्चाभवताम् ॥ १ ॥**

**तद् यद्रजतँ सेयं पृथिवी । यत् सुवर्णँ सा द्यौः । यज्जरायु ते पर्वताः ।**

---

पूर्वत्रादित्यो ब्रह्मणः पाद उक्तः । अथ तस्मिन् सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते—**आदित्यो ब्रह्मेत्यादेशः** । 'आदित्यो ब्रह्म' इत्युपदेशः क्रियत इत्यर्थः । **तस्योपव्याख्यानम्** । क्रियत इति शेषः । **असदेवेदमग्र आसीत्** **इदं** जगत् अग्रे **असत्** अव्याकृतनामरूपमासीत् । **तत् सदासीत्** । **तत्** अव्याकृतनामरूपं जगत् **सदासीत्** ईषन्नामरूपकार्याभिमुखमासीत् । **तत् समभवत्** अल्पतरनामरूपव्याकरणेन, अङ्कुरीभूतमिव बीजं क्रमेण स्थूलमभवदित्यर्थः । **तदाण्डं समवर्तत** । अण्डं संवृत्तमित्यर्थः । आण्डमिति च्छान्दसो दीर्घः । **तत् संवत्सरस्य मात्रामशयत** । संवत्सरस्य कालस्य **मात्रां** परिमाणम् एकरूपतया **अशयत** स्थितं बभूवेत्यर्थः । **तन्निरभिद्यत** । संवत्सरकालादूर्ध्वं तदण्डं निर्भिन्नमभवत् **ते—चाभवताम्** । ते **आण्डकपाले** अण्डकपाले रजतञ्च सुवर्णञ्चैकैकमभवतामित्यर्थः ।

**तद्—पृथिवी** । यत् रजतमयं कपालम्, तत् पृथिव्याद्युपलक्षितमधोण्डकपालमित्यर्थः । **यत् सुवर्णं सा द्यौः** । सुवर्णमयं कपालं द्युलोकोपलक्षितमूर्ध्वकपालम् । **यज्जरायु ते पर्वताः** । **जरायु** गर्भपरिवेष्टनम् । अण्डस्य शकली

---

**आदित्यो ब्रह्मेति** । अस्या आदित्यदृष्टेर्निर्दुष्टकल्याणघोषप्राप्त्यधीनसुखलाभः फलम् यथा लोके अण्डोत्पत्तिरण्डजजन्तूत्पत्त्यर्था, तथेहेति ब्रह्माण्डान्तः आदित्यस्यैव प्राधान्यं गमयितुमेवमुपव्याख्यानम् । अत एव पृथिवीद्युपर्वतादिषु निर्भिन्नकपालत्वादिकल्पनया सर्वगुणभूतत्वोक्तिः । **मात्रा**मिति अत्यन्तसंयोगे द्वितीया । यथा पक्ष्यादिजमण्डं कञ्चित् कालं तथैव स्थित्वा कालविपाकात् निर्भिद्यते, तथेति । **रजतमय**मिति । ऊर्ध्वाधोलोकानां सुवर्णत्वरजतत्वे अतिशयितभोगसाधनत्वतारतम्यादारोपिते । नात्र मयट् विकारार्थे । वस्तुतो रजतविकारत्वाभावात्

**यदुल्बँ स मेघो नीहारः। या धमनयस्ता नद्यः। यद्वास्तेयमुदकँ स समुद्रः॥२॥**

**अथ यत्तदजायत, सोऽसावादित्यः। तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्; सर्वाणि च[1] भूतानि; सर्वे च कामाः। तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति, सर्वाणि च भूतानि; सर्वे चैव[2] कामाः॥ ३॥**

1. चकारो न माध्वे 2. सर्वे च कामाः **शां मा.**

---

भावदशायां याः स्थूलगर्भपरिवेष्टनसिराः, ते पर्वता बभूवुरित्यर्थः। **यदुल्बम्, स मेघो नीहारः**। यत् **उल्बं** सूक्ष्मं गर्भपरिवेष्टनम्, तत् मेघसहितं हिमम्। **या धमनयः, ता नद्यः**। **धमनयः** सिरा इत्यर्थः। **यद्वास्तेयमुदकम्, स समुद्रः**। वस्तौ भवं **वास्तेयम्**।

**अथ यत्तदजायत, सोऽसावादित्यः**। **तत्** तस्मिन्नण्डे गर्भरूपं यदजायत, सः असावादित्य इत्यर्थः। **तं—कामाः**। **त**मादित्यं जायमानमनु **उलूलवः** उरूरवः = उरुरवाः विस्तीर्णरवाः महाध्वनियुक्ताः। **उलूलव** इति छान्दसं रूपम्। **घोषाः** शब्दाः, स्थावरजङ्गमानि **भूतानि च**, तेषां **कामाः** काम्यमानाः स्त्रीवस्त्रादयश्च **उदतिष्ठन्** उत्थितवन्त इत्यर्थः। सर्वस्यादित्योदयानन्तरभावित्वादिति भावः। **तस्मात्—कामाः**। तस्माद्द्यत्वेऽपि आदित्यस्योदयं प्रति, **प्रत्यायन**मस्तमयञ्च प्रति, उरुरवाः शब्दाश्च भूतानि च कामाश्च उत्पद्यन्त इत्यर्थः। उदयास्तमयवेलायां पक्षिघोषादीनां दर्शनादिति भावः।

---

अतः, 'प्राणिरजतादिभ्योऽञ्' इति राजतमित्येव स्यादिति न शङ्क्यम्। किंतु 'तत्प्रकृतवचने मयट्' इति भावे मयट्। प्रचुररजतरूपमित्यर्थः। **वस्तिः** मूत्रस्थानम्। **वास्तेय**मिति, 'यस्य वास्तेयमब्धिः' इतिवत्। **उलूलव** इति उत्सवकालीनाः शब्दविशेषाः देशविशेषे प्रसिद्धा इत्यानन्दगिरिः। अत्र बहुवचनत्वोपपत्तये उलूलुशब्दमुकारान्तं देशविशेषप्रसिद्धं कल्पयन्ति केचित्। सर्वथा रु शब्दे इति धातुनिष्पाद्यैतच्छान्दसरूपमूलको देशविशेषे ईदृशव्यवहारः, न तु अपभ्रंशलौकिकपदमिदमिति ज्ञापनाय **उरुरवा इति, छान्दस**मिति चोक्तम्। **अस्तमयञ्चेति**। यद्यपि प्राक् **जायमान**मित्युक्तस्यात्रोदयमात्रे घोषाद्युत्थितिकथनमुपष्टम्भकम् — अथापि तत्साहित्येनास्तमयेऽप्येतद्दर्शनादेवमुक्तम्। **प्रत्यायनपदस्य** प्रत्यागमन एव प्रसिद्धत्वात् सोऽप्यर्थः शाङ्करोक्तः उदयपदेनैव तस्योक्तत्वादिहोपेक्षितः। **अस्तु वा सोऽप्यर्थ इहोपलक्ष्यः; उदयं प्रति** इत्यस्यैव जायमानत्वरूपार्थव्युदासाय **प्रत्यायनं प्रति** इति विवरणम्; अन्यथाऽस्तमयपरत्वे

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते, अभ्याशो ह यदेनं साधवो घोषा आ च गच्छेयुः, उप च निम्रेडेरन्, निम्रेडेरन् ॥ ४ ॥**

इति तृतीयाध्याये एकोनविंशः खण्डः ।

इति छान्दोग्योपनिषदि तृतीयोऽध्यायः (तृतीयः प्रपाठकः) ।

---

अथ चतुर्थोऽध्यायः । ४—१.

**ओं । जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य**

---

**स य—निम्रेडेरन्** । हशब्दः प्रसिद्धौ । **एनम्** आदित्यब्रह्मोपासकम् **अभ्याशः** क्षिप्रम् । **यत्** ये इत्यर्थः । ये **साधवः** शोभनाः घोषाः, ते **उप** समीपे आगच्छेयुश्च । **निम्रेडेरन्** सुखं च कुर्युरित्यर्थः । '**मृड** सुखे च' इति हि धातुः; अन्तर्भावितण्यर्थः । **निम्रेडेरन् निम्रेडेरन्** इति द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

इति छान्दोग्योपनिषत्प्रकाशिकायां तृतीयोऽध्यायः (तृतीयः प्रपाठकः) ।

---

संवर्गविद्या प्रस्तूयते—

विद्यास्तुत्यर्था आख्यायिका — **जानश्रुतिर्ह — आस** । जनश्रुतस्यापत्यं **जानश्रुतिः** । हशब्दः प्रसिद्धौ । पुत्रसंज्ञस्य पुत्रः पौत्रः; तस्यापत्यं **पौत्रायणः** श्रद्धापुरःसरं देयं [1]यस्य, सः **श्रद्धादेयः** । अर्थिभ्यो बहु दातुं शीलमस्य; स **बहुदायी** । बहुस्य गेहेऽन्नं पक्तव्यं यस्य, स **बहुपाक्यः** । एवङ्गुणसंपन्नो जानश्रुति

1. अयं ग. पाठः; अन्यत्र, 'देयमस्य' इति ।

---

चक्षुरापत्तेरिति । **निम्रेडेरन्निति** । मृड क्षोदे सुखे च ( सुखने ) इति धातुग्रहणे मृड्णाति इति रूपं भवति । म्रेडृ उन्मादे इति धातौ च म्रेडतीति । प्रयोगोऽयं विमृश्यः ॥

तृतीयेऽध्याये प्रथममैश्वर्यमिश्रमुक्तिफलां आदित्यमधुविद्यामादिश्य अथ शुद्धमुक्तिफलिकां गायत्रीविद्या, तदनुबन्धिक्षुद्रफलकौक्षेयज्योतिर्विद्या, अथ तद्वदेव भारूपज्योतिर्विषयिणी मुक्तरूपा शाण्डिल्यविद्या, ततः प्रसक्तप्राणतत्त्वभूतवायुविषयिणी वायुवत्सककोशविद्या, प्राणात्मकपुरुषपुर्विषयकपुरुषविद्या, वायुप्राणरूपपादविशिष्टमनोब्रह्मदृष्टि, अथ तद्दृष्ट्यन्तर्गतप्रथमोपक्रान्तादित्यविषयकब्रह्मदृष्टिश्च क्रमेणोक्ताः । तत्राप्रधानतया दर्शितयोर्वायुप्राणयोः प्राधान्येन ग्रहणं यत्र, स वायुप्राणरूपसंवर्गविषयिणी परविद्या रैक्वेण ब्राह्मणेन जानश्रुतये क्षत्रियायोपदिष्टा चतुर्थप्रपाठकारम्भे प्रस्तूयते ।

आस । स ह सर्वत आवसथान् मापयाञ्चक्रे, 'सर्वत एव मेऽन्न[1]मत्स्यन्ती' ति ॥ १ ॥

अथ ह हँसा निशायामतिपेतुः । तद्धैवँ हँसो हँसमभ्युवाद, '[2]भो भोऽयि भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम् । तन्मा प्रसाङ्क्षीः[3] । तत् त्वा मा प्रधाक्षी' दि[4]ति ॥ २ ॥

1. अन्नमिति न शां. मा. 2. होहोऽयि शां. मा. 3. प्रसांक्षीत् शां. 4. प्रधाक्षीः शा. मा.

---

कस्मिंश्चिद्देशे आस । **स—अत्स्यन्तीति** । स ह जानश्रुतिः, 'सर्वत एत्य अतिथयो ममान्नं भोक्ष्यन्त' इत्यभिप्रायेण सर्वासु दिक्षु ग्रामनगरमार्गारण्यादिषु पान्थानामनाथानां शीतवातवर्षातप[1]वारणान्नोदकशयनाच्छादनादिपूर्णाः शालाः कारितवानित्यर्थः ।

**अथ — पेतुः** । एवंसति कस्यांचित् रात्रौ केचन महात्मानोऽन्नदानादिगुणैस्तोषिता भूत्वा हंसरूपास्सन्तो राज्ञो दर्शनगोचरे आगताः । **तद्ध — अभ्युवाद । तत्** तस्मिन् काले तेषां हंसानां मध्ये एकः पृष्ठतो गच्छन् हंसः अग्रेगामिनं कञ्चन हंसमुवाच । **भो — प्रधाक्षीदिति** । **भो भो अयि** इति संबोध्य, **भल्लाक्षभल्लाक्षे**त्यनेन विपरीतलक्षणया मन्दलोचनेति संभ्रमेण द्विवारं संबोधनम् । **समं दिवा** स्वर्गेण समम्, [2]**दिवा** दिवसेन समं वा अस्य राज्ञः तेजः प्रसृतम् । **तत्** तस्मिन् तेजसि **मा प्रसाङ्क्षीः** मा प्रसक्तो भूः । 'प्रसक्तौ को दोष' इत्यत्राऽऽह **तत् त्वा मा प्रधाक्षीदि[3]ति** । **तत्** तेजः त्वां मा दहेदित्यर्थः । इत्यभ्युवादेत्यन्वयः ।

1. वर्षातपनिवारक ग. 2. स्वर्गेण दिवसेन वा समम् क. 3. प्रधाक्षीरिति ग.

---

**श्रद्धादेय** इति । तथाच तैत्तिरीयम्, श्रद्धया देयमिति । **अतिपेतु**रिति । सर्वत्रान्नादिप्रदानार्थावसथादिनिर्मातुरस्य जानश्रुतेर्धार्मिकाग्रेसरस्य स्वदेशवर्तिमहात्मरैक्वसंराधन—सर्वदर्शित्वसर्वश्लाघ्यपरमान्नभोक्तृत्वार्थपरविज्ञानलम्भनकाम्ययेति शेषः । **अभ्युवादे**ति । अभिमुखीकरणेन संबोधनेन उवादेत्यर्थः । एवमुपर्यपि । **भोभो** इति संबोधनं तस्य दूरं गतत्वात् । तदाशयेनाऽऽह **इति संबोध्ये**ति । इति संबोध्य भल्लाक्षेति द्विवारं संबोधनं तेन विपरीतार्थे लक्षणाकरणेन मन्दलोचनेत्यर्थे संभ्रमकृतमिति योजना । भोभो इत्यस्यैव पर्याप्तत्वाद् भल्लाक्षेति संबोधनं व्यर्थमिति न; दिवासमस्य जानश्रुतिज्योतिषोऽपि दर्शनं ते बत नेति, सावधानं तेजोदर्शनेन दूरान्निवृत्त्यर्थं, मन्दलोचनेत्यर्थविवक्षया तत्करणात् । तत्रापि द्विरुक्तिस्तु भोभो इतिवत् संभ्रमकृतेति भावः । भद्राक्षेति पदं भल्लाक्षेति विकृतमित्यानन्दगिरिः । (भद्र. भद्दल. भल्लेति ?) भल्लतुल्यनेत्रेति क्वचित् कोशे व्याख्यानम् । **दिवसेने**ति । इयं निशाप्यत्र

**तमुह परः प्रत्युवाच, 'कम्वर एनमेतत्सन्तँ सयुग्वानमिव रैक्कमात्थे' ति । 'यो नु, कथँ सयुग्वा रैक्क' इति ॥ ३ ॥**

**यथा कृताय विजितायाधरेऽयाः संयन्ति, एवमेनँ सर्वं तदभिस**

---

**तमुह परः प्रत्युवाच ।** एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य तदसहमान इवापरो हंसः प्रत्युवाचेत्यर्थः । [ प्रत्युक्तिमेवाह ] **कं—रैक्कमात्थेति ।** उ इत्यनर्थको निपातः । अरे **कं सन्तं** केन माहात्म्येन युक्तं सन्तम् **एनं** जानश्रुतिं प्रति **सयुग्वानं** सशकटं **रैक्कमिव** रैक्कं प्रतीव **एतत्** [1]प्रशंसावचनं ब्रवीषि[2] । रैक्क एव ब्रह्मज्ञो महाप्रभावः । अब्रह्मज्ञस्यास्य किं तेजः; किं वा मां दहेदिति भावः ।

एवमुक्तः पश्चात् पतन् हंसः पृच्छति -- **यो नु कथं सयुग्वा रैक्क इति ।** य उक्तः, स किंप्रकार इत्यर्थः ।

इतर आह — **यथा कृताय—स मयैतदुक्त** इति । यथा लोके — कृतनामा **अयः** द्यूतसमयप्रसिद्धः चतुरङ्कायः, तत्र **विजितं** जयो यस्य सः

1. प्रशंसापरं वचनम् ग. 2. प्रब्रूषि ख.

---

दिवसप्राया ! तत् कथं न पश्यसीति भावः । उ इति । **कम्बर** इत्यत्र कं वरः इति छित्वा **वरो** वराको जानश्रुतिरिति क्लिष्टस्यातिनिन्दारूपस्यानन्वितस्य परानुयायिभामत्यादिकथितस्यार्थस्यासंमतस्य इदमेव शाङ्करेऽपि दृष्टमाहतम् । न च 'निपात एकाजनाङ्' इति प्रगृह्यापत्तिः । 'मय उञो वो वा इति संध्युपपत्तेः । अतः उकार एवंहेति **एतदि**त्यस्य एवमित्यर्थोऽपि स्यात् । **सन्तमि**ति **रैक्कविशे**षणमिति माध्वयोजना । तदा, 'सन्तमेनं ततो विदुः' इत्युक्तस्य ब्रह्मवित्त्वस्य रैक्के कण्ठोक्तिः । **सयुग्वानम्** । युग्ययुक्ता शकटी युग्वा । (मत्वर्थीयो वनिप्प्रत्ययः ।) तत्सहितम् । **यो न्विति** । एतदनन्तरं स इत्यध्याहारः । योऽसौ, स सयुग्वा रैक्कः कथम्भूत इति । **इतिशब्दः** प्रश्नसमाप्तौ ।

**चतुरङ्काय** इति । यथा चतुरादिपादधर्मकाः चतुरादिसहस्रसंवत्सरसंख्याकाः युगभेदाः, तथा चतुरङ्कत्र्यङ्क द्व्यङ्केकाङ्काः अयाः क्रमेण कृतत्रेताद्वापरकलिनामानः । एतद्द्यूतप्रकारः **ज्योतिरविकरणकल्पतरुपरिमले** विशदं द्रष्टव्यः । अत्र किञ्चिदुच्यते । **अयो** नाम अक्ष इति केचित् । अक्षस्य भागः पार्श्वम् अय इत्यन्ये । 'अयः शुभावहे दैवे, गतौ, द्यूताक्षपातने' इति निघण्टुमनुसृत्य अयोऽक्षपातनमिति परे । तद् द्यूतम् । तद् द्विविधम् एकाक्षपातनं बह्वक्षपातनञ्च । तत्र एकाक्षपातनमङ्किताक्षपातनम् । अङ्को नाम बिन्दुरूपं चिह्नमक्षपार्श्वेषु । एकत्र चत्वारोऽङ्काः, अन्यत्र त्रयः, अपरत्र द्वौ, इतरत्र एकश्च । एवम्भूतेनाक्षेण दीव्यत्सु पुरुषेषु येन पातितस्याक्षस्य चतुरङ्को भागः उत्तानः उपरि दृश्यमानो भवति, स कृतायभाक् विजयी ।

**मेति, यत् किञ्च प्रजाः साधु कुर्वन्ति, यस्तद् वेद, यत् स वेद, स मयैतदुक्तः' इति ॥ ४ ॥**

---

कृतायविजितः पुरुषः; अथवा **विजितं** विजयः। तस्मै इत्यर्थः — तदर्थमितरे त्रिद्व्येकाङ्काः **अधरे** न्यूनाः अयाः **संयन्ति** संगच्छन्ते, अन्तर्भवन्ति — चतुरङ्के कृताये एकाङ्कद्व्यङ्कत्र्यङ्कानां 'शतं सहस्रे संभवती'ति न्यायेन विद्यमानत्वात् तत्रा-न्तर्भवन्तीत्यतः कृताङ्कविजयिनः एकाङ्कादिविजयोऽप्यस्तीति भावः —, **एवमेव** लोके प्रजाः **यत् साधु कुर्वन्ति** यद्यत् शोभनं कर्मानुतिष्ठन्ति, तत् सर्वम् **एनं** कृता-यस्थानीयं रैक**मभिसमेति** संगच्छते। तत्कर्मणि सकलं शोभनं कर्म अन्तर्गतमिति यावत्। किञ्च **यस्तद् वेद यत् स वेद स मयैतदुक्त इति**। **सः** रैक्वः यद् वेद, तदेवान्योऽपि यः कश्चिद् वेद। तद्ज्ञातमेवान्ये जानन्ति। तद्ज्ञाने सर्वज्ञानमन्त-र्गतमित्यर्थः। **सः** तादृशो रैक्वः मया **एतत्** इदानीं (एतद्वाक्येन), 'सयुग्वानमिव

---

येस्तु पातितेऽक्षे त्र्यङ्कादिपार्श्वानामुत्तानता, ते पराजयिनः। चतुर्षु त्र्यादीनामन्तर्भावात्। अन-ङ्किताक्षपातनं तु बह्वक्षपातनम्। अनियतसंख्यान् राशिभूतान् अक्षान् विकीर्य चतुष्कशो गणने क्रियमाणे यस्य पुंसोऽन्तिममपि गणनं पूर्वसमं चतुरक्षात्मकम्, स कृतायेन विजयी। येषां तु त्र्यादिरूपतया तत् न्यूनम्, ते पराजयिनः। अत्र **कृतायविजितायेति** मूलमुभयसाधारणमिति भाष्येऽपि 'चतुरङ्काय'इत्यादि उदाहरणमात्रत्वात् प्रकारान्तरोपलक्षणम्। अस्त्यन्यदपि द्यूतं नियतसंख्यपञ्चाक्षपातनादिरूपम्, यत्राक्षाणां सर्वेषामुत्तानतया पातने विजयः, अन्यदा पराजय इत्यादिव्यवस्था। तादृशं तु द्यूतं न कृतादिशब्दैः प्रसिद्धम्।

अत्र कृतायस्य दृष्टान्ततया कथनम्, राज्ञां द्यूतपरिचयशालितया परिचितस्य दृष्टान्ततया कथनस्य युक्तत्वात्, रैक्वविद्यायां कृतत्वभावनासद्भावाच्च तस्योपस्थितत्वात्। एतच्छ्रवणाच्च राजा कितव इवाक्षपराजितो व्याकुलहृदयो भवेदिति।

**पुरुष** इति। एनमिति रैक्वस्य पुरुषस्य दार्ष्टान्तिकत्वेन ग्रहणात् इदं दृष्टान्तपदं पुरुषपरं स्वीकृतम्। आहिताग्न्यादिगणान्तर्भावकल्पनया वा 'विजितकृतायाय' इत्यर्थे इदं रूपम्। दार्ष्टान्तिके **सर्वं तदि**ति क्रियाग्रहणात् क्रियायाः क्रियायामन्तर्भावस्य स्वरसत्वात् **एन**मिति रैक्वो-क्तावपि रैक्वक्रियायां पर्यवसानभिप्रालोच्यात्रापि विजयक्रियापरत्वेन व्याख्याति **अथवे**ति। एवं **कृताये**ति चतुर्थ्यन्तं पृथक्पदमेव स्यात्। **विजिताये**ति रामो विजयत इतिवदकर्मकात् कर्तरि क्तः। अस्तु वा कर्मणि क्त एव; 'कृतं यजमानो विजिनाति' (आ. श्रौ. ५–२१) इति प्रयोगात्। तदर्थस्तु कृतेन यजमानो विजयत इत्येव। **सहस्रे संभवतीति। संभवो** मेल-नम्। अन्तर्भावः।

रैक्कमात्थे' ति (त्यनेन, उक्त इत्यर्थः। **वेदान्ताचार्यैस्तत्त्वटीकायामस्यार्थस्य प्रतिपादितत्वात्।** उक्तञ्च **भगवता भाष्यकृता, "लोके यत् किञ्चित् साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्गतम्, स रैक इत्याह" इति**

---

**तत्त्वटीकायामिति** : अत्र तत्त्वटीकाभावप्रकाशिकानुसारात्, 'तदेवान्योपि यः कश्चिद वेद' इत्यस्य अन्योपि कश्चित् यो वेदेति योजना ग्राह्या। यच्छब्दस्य प्रतिसंबन्धि च **एन**मिति पूर्वंपदम्। अतः, 'एवकारे कश्चिदितिपदे चाश्रूयमाणे कथमयमर्थः। एवकाराभावे हि अधिकत्वं न सिध्यति' इति न शङ्क्यम्। अत्र रैक्ककर्मणि सकलकर्मान्तर्भाववत् रैक्कज्ञाने सर्वज्ञानान्तर्भावोऽपि सिध्यतीति विशदीकरणार्थं, 'तदज्ञातमेवान्ये जानन्ति। तदज्ञाने सर्वज्ञानमन्तर्गतम्' इति स्वयं किञ्चिदुक्तम्। 'यस्तद्वेद' इत्यस्यान्वयस्तु, 'एनं सर्वं कर्म तदभिसमेतो' इत्यत्रेष्टः, तत्त्वटीकानुसारस्य दर्शितत्वात्। अत्र **तज्ज्ञात**मित्यत्र तत्पदं रैक्कविदितवेदिपुरुषपरम्। तथाच, एनं सर्वं कर्म तदभिसमेतीत्यन्वय एव दर्शितो भवति। **शाङ्करेऽपि** इत्थमेवोपनिषद्योजना। यतः – एनमित्यादेः प्रथमोऽर्थः रैक्कं सर्वमभिसमेतीति; अथ यस्तद्वेदेत्यादिना, 'न केवलं रैक्कमेव, किंतु रैक्कविदितं यो वेद एनमपी'ति उच्यते इत्यर्थद्वयं स्पष्टं तत्र। तमित्यनुक्त्वा एनमितिकथनं संनिहितं जानश्रुतिमाकलय्येति च **स्वरसम्**। यत् रैक्को वेद तत् जानश्रुतिरपि विद्याच्चेत्, रैक्कमिव एनमपि प्रजाकर्म सर्वमभिसमियात्। **ततोऽयमपि** स इव समाततज्योतिः स्यात्। न तु तदज्ञानेन एवं बहुदायित्वादिमात्रेणेति इतोऽवगमात् रैक्कशिष्येण मया भाव्यमिति जानश्रुतिः प्ररोचितो भवति। अत्र तत्त्वटीकाद्वितीययोजनायां रैक्कविदितवेदिनि सर्वप्रजासाधुकर्मसंगम एव श्रुत्या साक्षादुक्तः। एवं सति **भाष्योक्तज्ञानकर्मो**भयसंगमलाभः कथमिति चेत् — एकत्र कर्ममात्रस्य अन्यत्र ज्ञानमात्रस्य चोक्तावपि उभयमुभयत्र विवक्षितम्। कर्मज्ञानयोर्मिथः साध्यसाधनभावात्। तदैवोपपादनौचित्यात्। अत्र पूर्वत्र कर्मणा ज्ञानमुपलक्षितमिति ज्ञापनाय **सर्वचेतनगतविज्ञान**स्य भाष्ये पश्चान्निर्देशः; **वेदे**ति कर्मोपलक्षणमिति ज्ञापनायोत्तरत्र **ज्ञानकर्मे**ति क्रमादरणमिति च भाव्यम्। भाष्ये तु **तत् यत्** इति पदयोर्विनिमयेन, 'लोके यो यद् वेद, तत् स रैक्को वेदे'त्युक्तम्।

एवं तु समीक्षणे अन्यान्योऽप्यर्थः संभाव्यते। यथा—**सः** रैक्को यद् वेद, तद् यो वेद, स रैक्को मयोक्त इत्यर्थः। अनेन रैक्कविदितवेदी रैक्क इति कथनात् तद्विदितं स एव वेद; नान्य इति सर्वज्ञानस्य तदीयज्ञानान्तर्गतत्वं भाष्योक्तं स्पष्टम्। यथा च—यो रैक्कः तत् प्रकृष्टं दुर्ग्रहं (ब्रह्म) वेद, एनं सर्वं कर्माभिसमेति। **यत्** यस्मात् कारणात् स वेद, **एतत्** एतस्मात् कारणात् स रैक्को मया **उक्तः** प्रशंसित इत्यर्थः: तेनाब्रह्मविदो जानश्रुतेः बहुदायित्वादिसर्वविहितकर्मपरत्वेऽपि, 'अन्तवदेवास्य तद् भवती'त्युक्तरीत्या न महत्त्वम् – यावत् रैक्कस्य, 'पामानं कषमाण'मित्युक्तरीत्या विहितमहनीयकर्मानुष्ठानविरहिणोऽन्यथा चेष्टमानस्यापि ब्रह्मवित्त्वात् महत्त्वमित्युक्तं भवति। सर्वापेक्षया तु तत्त्वटीकादर्शितोऽर्थः सर्वयच्छब्दतत्प्रतिसंबन्धिशब्दैकान्वयेनैकवाक्यतासंपादकोऽक्लिष्टो जानश्रुतिप्ररोचकश्चेति।

यदपि **व्यासार्यै**र्लघुसिद्धान्ते, "आवृत्तिरसकृदुपदेशात्" इत्यत्र, **यस्तद् वेद** = यो वेदिता, **यत् स वेद** = यद् वेद्यम, **स मयै**तदुक्तः(म) स वेदिता रैकः, **एतत्** तद्वेद्यं ब्रह्म इत्येतदुभयं मयोक्तम्, तव मयोपदिष्टमित्यर्थः' इत्युक्तम्—तदप्येतत्परं द्रष्टव्यम्; न तु प्रतीयमानार्थपरम्। **यस्तद् वेद यत्** स वेदेति वाक्यात् प्राचीने, 'यथा कृतायविजितायाधरेऽयाः संयन्ति, एवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ती' ति वाक्ये ब्रह्मप्रसक्तेरेवाभावेन वेदिता वेद्यञ्च तवोपदिष्टमित्यस्यार्थस्यासंभवेन **यस्तद् वेद यत् स वेदे**ति वाक्येन प्रतिपादनासंभवात्; भाष्यविरोधाच्चेति द्रष्टव्यम्।

[केचित्तु—भगवता भाष्यकृता लघुसिद्धान्तभाष्ये, 'यस्तद् वेद यत् स वेद स मयैतदुक्तमित्यत्र' इति एतद्वाक्यप्रतीकस्य धृतत्वात् तदनुरोधेन व्यासार्यैः स मयैतदुक्तमिति नपुंसकान्तपाठस्य गृहीततया तत्र नपुंसकस्य उक्तशब्दस्य स इति पुल्लिङ्गतच्छब्दविशेषणत्वायोगात्, यस्तद् वेद यत्स वेदेति पुंनपुंसकान्तयच्छब्दद्वयनिर्दिष्टयोः वेत्तृ (वेदितृ?) वेद्ययोः 'स मयैतदुक्त'मित्यत्र क्रमेण प्रतिनिर्देशकयोः स एतदिति पुंनपुंसकसर्वनामशब्दयोः श्रवणेन, **सः** वेदिता **एतद्** वेद्यं परं ब्रह्मेत्येतदुभयं मयोक्तमित्यर्थस्यैव वाक्यस्वारस्यलभ्यत्वाच्च स एवार्थो युक्त इति व्यासार्याभिप्रायः। न चात्रोदाहृतभाष्यविरोधः; 'प्रकाशश्च कर्मण्यभ्यासात्' इति सूत्रे,

'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥'

इति मनुस्मृतौ च मनोव्यापारात्मके वेदने कर्मशब्दप्रयोगदर्शनेन 'यत् किञ्च प्रजाः साधु कुर्वन्ति' इत्यनेनैव सर्वप्रजानुष्ठितसाधुकर्मण इव सर्वचेतनगतज्ञानस्यापि ग्रहणं संभवतीत्यभिप्रायेणैव तत्र भाष्ये, 'यत् किञ्चित् साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानम्' इति कर्मापेक्षया ज्ञानस्य पृथङ्निर्देशात्। अत एव

---

**लघुसिद्धान्ते**—**इत्यत्रे**ति। लघुसिद्धान्तगतावृत्तिसूत्र व्याख्यानावसरे इत्यर्थः। आवृत्त्यधिकरणेपीदमुक्तमेव। **भाष्यविरोधा**दिति। रैक्कमात्रोपदेशस्यैव भाष्ये उक्तेरिति भावः। **केचित्तु** इत्यादिः **आहु**रित्यन्तः पाठः क्वाचित्कः। आहुरित्यस्वरसः सूच्यते, लघुसिद्धान्तभाष्ये **उक्त**मिति नपुंसकोपनिषत्प्रतीकधारणादर्शनात्। आवृत्त्यधिकरणटीकायां, 'पुल्लिङ्गनिर्देशो रैक्काभिप्रायेणे'त्युक्तत्वाच्च। भावप्रकाशिकायामपि पूर्वोक्तनिर्वाह एवास्ति; टीकापर्यवसानञ्च।

**तदुह जानश्रुतिः पौत्रायण उपशुश्राव । स ह सञ्जिहान एव क्षत्तारमुवाच, 'अङ्गारे ! ह, 'सयुग्वानमिव रैक्वमात्थे'ति; 'यो नु कथं सयुग्वा रैक्व' इति (५); 'यथा कृतायविजितायाधरेऽयाः संयन्ति एवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तद् वेद, यत् स वेद स मयै तदुक्त' इति" ॥ ६ ॥**

**स ह क्षत्ताऽन्विष्य, 'नाविद' मिति प्रत्येयाय । तं होवाच, 'यत्रारे**

---

पूर्ववाक्ये ब्रह्मप्रसक्तिरेव नास्तीत्यपि प्रत्युक्तम् । सर्वप्रजानुष्ठितसाधुकर्मणः सर्वचेतनगतज्ञानस्य च रैक्वज्ञानकर्मणोः स्वरूपेणान्तर्भावस्य दुरुपपादतया कृतायाधरायदृष्टान्तस्वारस्येन च रैक्ववेदनविषये तत्कर्मोद्देश्यभूते च सविभूतिकब्रह्मणि सर्वप्रजानुष्ठितकर्मोद्देश्यसर्वचेतनगतज्ञानविषययोरन्तर्भावस्यैव वक्तव्यत्वेन पूर्ववाक्ये ब्रह्मप्रसक्तेरावश्यकत्वात् । तत्त्वटीकाग्रन्थस्तु, 'स मयैतदुक्त'इति पुल्लिङ्गान्तपाठे च सति तन्निर्वाहमात्राभिप्रायः । अतो व्यासार्यप्रतिपादितार्थ एव भगवद्भाष्यकृदभिमत इति न काप्यनुपपत्तिरित्याहुः । ]

**तदु—शुश्राव** । **तत्** ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं वाक्यं स राजा शुश्राव । **स ह—उवाच** । स कथमपि निशामतिवाह्य **संजिहान** एव तल्पं त्यजन्नेव क्षत्तार**मुवाच** वक्ष्यमाणमुक्तवान् । क्षत्ता नाम,

> "वैश्याद् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
> जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम् ॥"

इत्युक्तरीत्या राजान्तःपुररक्षकः प्रतिलोमजातिविशेषः[1] । **अङ्ग अरे ह सयुग्वानमिव—तदुक्त इति** । ह (?) अरे अङ्ग वत्सेति तं क्षत्तारं राजा संबोध्य, 'रात्रावेवं हंसयोः सल्लापः समजनी'ति, **सयुग्वानमिव रैक्वमात्थे**त्यादिहंसोक्तिप्रत्युक्तिवाक्यानुवादपूर्वकं रैक्वस्य चिह्नमुक्तवानित्यर्थः ।

**स ह क्षत्ता प्रत्येयाय** । स च क्षत्ता शकटलक्षणरैक्वचिह्नमनुसरन् ग्रामनग-

1. अत्र 'क्षत्ता' इति ख. न तु पूर्वं क्षत्ता नामेति ।

---

**अङ्गेत्यादि** । अत्र सयुग्वानमित्यादि सर्वं हंसोक्तिप्रत्युक्त्यनुवादरूपम् । न तु, 'हे क्षत्तः किमिति मां रैक्वमिव स्तौषी'ति जानश्रुतिराहेत्येवंरूपशाङ्करव्याख्यानं रुचिरम् । तथाच, 'इति हंसव्याहारः श्रुतः । तत् तमन्विष्याऽऽगच्छे'ति पूरणीयम् ।

**ब्राह्मणस्यान्वेषणा, तदेन[1]मर्च्छे' ति ॥ ७ ॥**

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश। तँ हाभ्युवाद, 'त्वं नु भगवः! सयुग्वा रैक्क' इति। 'अहँ ह्यरा ३' इति [2]ह प्रतिजज्ञे। स ह क्षत्ता[3], 'अविद'मिति प्रत्येयाय ॥ ८ ॥**

इति चतुर्थाध्याये प्रथमः खण्डः ।

---

## ४—२.

**तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदाऽऽदाय प्रतिचक्रमे। तँ हाभ्युवाद (१), 'रैक्केमानि षट् शतानि गवाम्,**

1. तदेनमृच्छेति **मा.** 2. इति प्रतिजज्ञे **मा.** 3. क्षत्ताऽन्विष्य अविदं **मा.**

---

रादिकमन्विष्य **नाविदं** नाज्ञासिषमिति प्रत्यागतवात् । **तं—तदेनमर्छेति**। अरे[1] **ब्राह्मणस्य** ब्रह्मविदः **यत्र** विजनेषु[2] नदीपुलिनारण्यादिषु मार्गणं युक्तम्, **तत्** तत्र गत्वा **एनमर्छ** रैक्कं प्राप्नुहि=मार्गणं कुर्विति तं राजोवाचेत्यर्थः ।

**सोऽधस्तात्—विवेश**। अथ पुनः **सः** क्षत्ता गत्वा विजने कस्मिंश्चिद्देशे शकटस्याधस्तात् पामानं **कषमाणं** कण्डूयमानं रैक्कमेत्य दृष्ट्वा **उपोपविवेश** समीपे गत्वा विनयेनोपविष्टवान्। **तं ह—प्रत्येयाय**। 'हे भगवन्! त्वं वा रैक्कः' इति क्षत्त्रा पृष्टः ऋषिः, 'अरे! क्षत्तः! रैक्कोऽहमेवे'ति प्रत्युवाच। तत् श्रुत्वा स क्षत्ता **अविदम्** अज्ञासिषमिति प्रत्यागत इत्यर्थः । ४—१.

**तदुह जानश्रुतिः—प्रतिचक्रमे**। [उहेत्यनर्थको निपातः। **तत्**] तत्र जानश्रुतिः गवां षट् शतानि, **निष्कं** कण्ठाभरणम्, अश्वतरीयुक्तरथं तदा गृहीत्वा रैक्कं **प्रतिचक्रमे** गतवान्। **तं हाभ्युवाद**। गत्वा च राजा तं रैक्कम् इत्युवाचेत्यर्थः। **रैक्केमानि—रथः**। हे रैक्क! एतत् सर्वमानीतम्। तद् गृहाण त्वमित्यर्थः।

1. अरे क्षत्तः **ख.** 2. विविक्तेषु **क.**

---

**रैक्कमानी**ति। ननु तूष्णीं गवादिकमुपहृत्य विद्योपदेशमात्रप्रार्थनं युक्तम्। न तु गुरोस्तन्नाम्ना समाह्वानं स्वदीयमानार्थगणनञ्चेति चेत्—अयमेव रैक्क इति पुनः स्वयं निर्णेतुं नामनिर्देशः। पुनरागमनकाले नामनिर्देशोऽपि पुना रैक्कत्वनिश्चयार्थमेव स्यात्। तावत् रैक्केण तपोबलेन कन्यास्वीकारानुगुणं स्वरूपमन्यथाकृतं स्यादिति। अस्तु वा शूद्रेतिसंबोधनानुगुणं तस्यो-

